ब्रह्मातिरिक्तनियामकाः सन्ति न वेति चिन्तायाम् । सन्त्येव । तस्य परगृहगतत्वात् । दृश्यन्ते राजगृहगतानां स्वापकृष्टाः प्रतीहारादयो नियामका दृष्टा इति प्राप्ते । अत एव सत्यसंकल्पादेव तेषां भगवदतिरिक्त आचार्यातिरिक्तश्च स्वाधमः समो वा नियामको नास्ति । संसाराविशेषापत्तेः । अथ य इहाऽऽत्मानमनुविद्य व्रजन्ति एतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवतीति श्रुत्या मुक्तानां कामचारत्वोक्तेः । न चेशोऽपि तेषामधिपो माऽस्तु । न तत्राभ्यधिकः कश्चित्सर्वे ते समचेतसः । कृताञ्जलिपुटा हृष्टा नम इत्येव वादिनः । तेऽर्चयन्ति सदा देवं तैः सार्धं रमते च स इति मोक्षधर्मे भगवन्नियम्यत्वस्य स्वीकारात् । परमानन्दकारित्वाच्च ॥ ९ ॥

ॐ अभावं बादरिराह ह्येवम् ॐ ॥ ४ । ४ । १० ॥

अत्र मुक्तानां भोगानुपपत्तिर्निवार्यते । मुक्तानां भोगः संभवति न वेति चिन्तायाम् । न संभवति । मुक्तस्य हि बाह्यदेहोऽस्ति न वा । आद्ये । तत्राभिमाने दुःखाद्यापात्तिः । अनभिमाने सुखस्यैव भोगानुपपत्तिः । द्वितीये । भोगासंभवः । न हि बाह्यदेहरहितस्य भोगो दृष्ट इति प्राप्ते । युक्त एव मुक्तानां भोगः । न चोक्तदोषः । चिन्मात्रं विनाऽन्यदेहानङ्गीकारात् । बाह्यदेहाभावेऽपि भोगसंभवादिति बादरिर्मन्यते । अशरीरो वाव तदा भवत्यशरीरो वाव तदा भवत्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इति श्रुतेः । न च ब्राह्मदेहेन तदुपपत्तिरिति वाच्यम् । सायुज्यभाजां तदुपपत्तावप्यन्येषामनुपपत्तेः । अयं भावः । यो यो देवः सूर्यादिर्भगवतो यद्यदङ्गादुत्पन्नः स तदङ्गे सायुज्यं प्राप्य भगवन्तं प्राप्नोति । स्वेच्छया निर्गच्छति च । तस्य भगवद्विग्रहेण भोगसंभवेऽपि तत्र लयमप्राप्यैव मुक्तानां तदसंभवः ॥ १० ॥

बाह्यदेहमभ्युपगच्छतां पक्षमाह—

ॐ भावं जैमिनिर्विकल्पाम्नानात् ॐ ॥ ४ । ४ । ११ ॥

सेन्द्रियस्य शरीरस्य भावं जैमिनिर्मन्यते । स एकधा भवति त्रिधा भवतीति विकल्पाम्नानात् । न हि देहं विनाऽनेकधा विहारः संभवति ॥ ११ ॥

नन्वेतन्मतद्वयस्य विरुद्धत्वात्स्वमतं किमिति शङ्कां निरस्यति—

**ॐ द्वादशाहवदुभयविधं बादरायणोऽतः ॐ ॥ ४ । ४ । १२ ॥**

उभयविधश्रुतिलिङ्गादिदर्शनात्सशरीरत्वमशरीरत्वं चेत्युभयविधं भगवान्बादरायणो मन्यते । यथा द्वादशाहस्य यजमानेच्छयाऽनेकयजमानकत्वेन सत्रत्वमेकयजमानकत्वेनाहीनत्वं न विरुद्धं तथा सत्यसंकल्पमुक्तेच्छया शरीरत्वाशरीरत्वादिकं न विरुद्धमित्यर्थः ॥ १२ ॥

ननु भवतु बाह्यदेहाभावभावयोरविरोधस्तथाऽपि भोगोपपत्तिः कथमित्याशङ्कां निरस्यति—

**ॐ तन्वभावे संध्यवदुपपत्तेः ॐ ॥ ४ । ४ । १३ ॥**

न देहाभावे भोगानुपपत्तिः । यथा हि संध्ये स्वप्ने बाह्यदेहाभिमानाभावेऽपि भोगस्तथा मुक्तावप्यभिमानाभावस्योभयत्र तुल्यत्वात् ॥ १३ ॥

देहसत्त्वे सुतरां भोगोपपत्तिरित्याह—

**ॐ भावे जाग्रद्वत् ॐ ॥ ४ । ४ । १४ ॥**

यथा जागरे भोगस्तथा मुक्तौ देहसत्त्वे सुतरां तदुपपत्तिरित्यर्थः । स्वप्नस्थानां यथा भोगो विना देहेन युज्यते । एवं मुक्तावपि भवेद्विना देहेन भोजनम् । स्वेच्छया वा शरीराणि तेजोरूपाणि कानिचित् । स्वीकृत्य जागरितवद्भुक्त्वा त्यागः कदाचन । इति स्मृतेः । तेजोरूपाणि प्रकाशरूपाणि । ये च मुक्ता भवन्तीह नरा भरतसत्तम । तेषां लक्षणमेतद्यच्छ्वेतद्वीपनिवासिनाम् । तत्र नारायणपरा मानवाश्चन्द्रवर्चसः । अनिन्द्रिया अनाहारा अनिष्यन्दाः सुगन्धिनः । एकान्तिनस्ते पुरुषाः श्वेतद्वीपनिवासिनः । न तत्राभ्यधिकः कश्चित्सर्वे ते समतेजसः । कृताञ्जलिपुटा हृष्टा नम इत्येव वादिनः । तत्र ये पुरुषाः श्वेताः पञ्चेन्द्रियविवर्जिताः । प्रतिबद्धाश्च ते सर्वे भक्ताश्च पुरुषोत्तमे । तेऽर्चयन्ति सदा देवं तैः सार्धं रमते च स इति मोक्षधर्मे प्राकृतदेहेन्द्रियाद्यभावमुक्त्वाऽलौकिकेन्द्रियादेरुक्तत्वात्सत्यसंकल्पनादेव तेषां सर्वं संभवतीति भावः ॥ १४ ॥

ननु देहसत्त्वपक्षे दुःखभोगः स्यादिति शङ्कां निरस्यति—

**ॐ प्रदीपवदावेशस्तथा हि दर्शयति ॐ ॥ ४ । ४ । १५ ॥**

यथा प्रदीपो दीपिकादिषु प्रविष्टस्तत्स्थतैलाद्येव भुङ्क्ते न तु काष्ण्यादि(?) शरीरमनुप्रविश्यापि तत्प्रकाशयन् पुण्यानेव भोगाननुभवन्ति न दुःखानीत्यादि हि शास्त्रं दर्शयति ॥ १५ ॥

ननु तीर्णो हि तदा सर्वान् शोकानित्यादिकं यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरेत्याद्यनुरोधेन स्वर्गपरमिति शङ्कां निरस्यति–

**ॐ स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॐ ॥ ४ । ४ । १६ ॥**

मोक्षसुप्त्योरेवेदं वचनम् । पिताऽपिता भवति । अनन्वागतं पुण्येन । अनन्वागतं पापेन । स्वमपीतो भवति तस्मादेनं स्वपीतीत्याचक्षते । ब्रह्मैव सद् ब्रह्माप्येतीत्यनन्तरावस्थायामुच्यते स्वर्गिणः । श्राद्धादिभोक्तुस्तदसंभवात् ॥ १६॥

**ॐ जगद्व्यापारवर्जम् ॐ ॥ ४ । ४ । १७ ॥**

अत्र मुक्तस्य भोगैयत्ता समर्थ्यनेऽन्यथेशस्य समर्थत्वं न स्यात् । मुक्तजगत्कर्तृत्वमस्ति न वेति चिन्तायाम् । अस्त्येव तस्य जगत्कर्तृत्वम् । सोऽश्नुते सर्वान् कामानिति श्रुतेः । मुक्तस्य सत्यकामत्वेन कामितसमस्तप्राप्त्युपपत्तेरिति प्राप्ते । नास्त्येव जगत्कर्तृत्वम् । जगद्व्यापारवर्जमेव हि सर्वकामाप्तिः । मुक्तिर्हि सादिर्जगत्कर्तृत्वं चानादि । यो जीवो मुक्तस्ततः पूर्वं स्रष्टुरीशस्यैव स्वाभाविकं सर्वदा स्रष्टृत्वं मुक्तानां न । विनिगमनाविरहात् । अणुत्वादपि जीवस्य सर्वकर्तृत्वानुपपत्तिः । देशतः कालतो व्यापिन्या अपि रमाया सार्वज्ञ्याभावात् ॥ १७॥

हेत्वन्तरमाह–

**ॐ प्रकरणादसंनिहितत्वाच्च ॐ ॥ ४ । ४ । १८ ॥**

यतो वा इमानि भूतानि जायन्त इत्यादौ, स ऐक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीत्यादौ, ये चैव सात्त्विका भावा राजसास्तामसाश्च ये । मत्त एवेति तान्विद्धीत्यादौ च कारणप्रकरण ईशस्यैव प्रक्रान्तत्वात् । मोक्षप्रकरणेऽत्र जीवस्यैव प्रक्रान्तत्वाच्च । निरतिशयसार्वज्ञ्यादिसामर्थ्याभावेन जीवस्य कारणतायामसांनिध्याच्च ॥ १८ ॥

उक्तमाक्षिप्य समाधत्ते–

**ॐ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॐ ॥ ४ । ४ । १९ ॥**

ता यो वेद स यद्ब्रह्म सर्वेऽस्मै देवा बलिमावहन्तीति मुक्तस्य जग-